# प्रणवविचार

ओम्     लोके यजुर्वेदाध्ययनारम्भकाले वेदस्वरूप-
लक्षणज्ञाश्शिष्टाः  १
हरिः ओम्  (háríḥ óm)
इत्येकमात्राकाल अकार इकारसहिताभ्यामुदात्तस्वर-
युताभ्यां हकाररेफाभ्यामर्धमात्रा काल विसर्जनीयेन च
सहितं हरिशब्दम्मात्रिका वत्सानुसृति संज्ञिकविवृत्ति-
विरामेण सहचतुर्मात्राकालोदात्तस्वरसहितमोम्कारं
चोच्चार्यानन्तरं वेदाध्ययनारम्भं कुर्वन्ति  २
अत्र केचिच्चतुर्मात्राकालोदात्तस्वरविशिष्टोम्कारोच्चारण-
मात्रमेवालं न तु हरि शब्दोच्चारणमिति वदन्ति ।
ओम्कारस्योत्कृष्टत्वात् ।
ओम्कारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभाविति
ओंकारस्य मङ्गलवाचकत्वात्
ओमित्येकाक्षरं ब्रह्मेति
ब्रह्मप्रतिपादकत्वाच्च
ओम्कारः स्वर्गद्वारं तस्माद्ब्रह्माध्येष्यमाण
एतदादिप्रतिपद्येतेति धर्मशास्त्रविधेश्चोंकारस्योत्कृष्ट-

त्वमिति चेन्मैवम् । ओम्कारस्योत्कृष्टत्वे सत्यपिपूर्वं
हरिशब्दोच्चारणाभावे दोषः प्रसज्यते ।
अध्यायस्य मुखे चान्ते भूत्वा विद्वानतन्द्रितः
संरक्षणाय वेदानां हरिं प्रणवमुच्चरेत्
आदावनुक्ते स्रवति तस्य चान्ते विशीर्यते
आद्यन्तौ पुटितोंकारौ स्यातामङ्गानि तस्य तत्
इत्यादि शीक्षा वचनबाहुल्यादवश्यं विसर्जनीय सहित
हरिशब्दपूर्वकोंकारोच्चारणं कर्तव्यं अत्रान्यः कश्चिदाक्षेप
उच्यते ओंकारात्पूर्वस्य हरीति प्रातिपदिकत्वात्परस्य
विसर्जनीयस्य रेफमेतेष्वतिसूत्रेण रेफप्राप्तेः ३
हरि॑र॒न्यस्य॒ां भव॑ति स्व॒धावा॑न्
हरि॑रसि हारियोज॒न इत्यादि
स्थलेषु स्थितस्य हरिशब्दस्य स्वरितान्तत्वदर्शनाच्च
४
ओन्तद् ब्र॒ह्म
ओन्तद्वा॒युरिति
आदिस्थलेषु स्थितस्योंकारस्य स्वरितत्वदर्शनाच्च
हरिरोमित्यनिष्टरूपप्रसंगःस्यात् ५
किञ्च ओम् भूः । ओम् भुव इत्यादि स्थलेषु

स्थितस्योंकारस्य द्विमात्राकाल दर्शनादस्य
प्रारम्भकोंकारस्य चतुर्मात्राकालत्वं कथमिति
नायमाक्षेपः ६
हरिप्रणवयोर्मध्ये स्थितस्य विसर्जनीयस्य
रेफप्राप्तिरस्तीति यदुक्तम् । तदयुक्तम् ।
प्रश्नानुवाकाद्यारम्भे सविसर्गोच्चको हरिः ।
न सन्धिः प्रणवस्यादौ विरामे स्वरितो भवेत् ७
प्लुतानां प्रगृह्याणां च तथा वर्णक्रमस्य च
हरिप्रणवयोर्मध्ये सन्धिर्न स्यात्कदाचनेति
शीक्षायां विशेषविधेर्हरिप्रणवयोर्मध्ये स्थितस्य
विसर्जनीयस्य रेफमेतेष्विति सूत्रोक्तरेफरूपसन्धिर्न
प्रसरति ८
किञ्च । हरिरन्यस्यां भवति स्वधावान् । हरिरसि
हारियोजन इत्यादिस्थलेषु स्थितस्य हरि शब्दवत्
हरिः ओमित्यत्रापि स्थितस्य हरिशब्दस्य यत्
स्वरितान्तत्वमुक्तं तदप्यसाधु । प्रश्नानुवाकाद्यारम्भे
सविसर्गोच्चको हरिः । न सन्धिः प्रणवस्यादौ
विरामे स्वरितो भवेदिति शीक्षा वचनात् प्रश्नानुवाका
द्यारम्भकालोक्तहरिशब्दः सोदात्त एव ९

किञ्च । ओम्भूः । ओम्भुव इत्यादि स्थलेषु
स्थितोंकारवदस्य प्रारम्भकोंकारस्य चतुर्मात्राकालत्वं
नेति यदुक्तं तदप्यसंगतमेव ।
प्रारम्भकश्चतुर्मात्रो वेदस्थः स्यात्तदर्धकः ।
अध्यायान्त्योऽनुवाकान्त्यः कर्माद्यश्च त्रिमात्रिक इति
वचनात्प्रश्नानुवाकाद्यारम्भकालो
कालत्वं सिद्धम् १०
किञ्च । ओँन्तद् ब्रह्म । ओँन्तद्वायुरित्यादिस्थलेषु
स्थितोंकारवदस्य प्रारम्भकोंकारस्य यत्स्वरितत्वमुक्तं
तदप्यसमञ्जसम् ।
यजुः प्रणव उच्चः स्यात् स्वराः स्युस्त्वों तदादिषडिति
वचनादों तदादिषडोंकारव्यतिरिक्तस्थले यजुर्वेदे
प्रणवः सोदात्त एव । प्रणवस्य स्वरितत्वं तु ओं
तद्ब्रह्मेत्यनुवाकविषयमिति विवेकः ११
तस्माद्यजुर्वेदाध्ययनारम्भकाले हरिः ओमिति
पूर्वोक्तशिष्टसंप्रदाय एव प्रमाणमिति राद्धान्तः १२
हरिः ओम्
केवलः स्वरयुक्तश्च मात्रिकासहितस्तथा
सांगश्च सारभूतश्च पञ्चवर्णक्रमान्विदुः

प्राकृता वैकृता चैव स्वरभक्ती उभे मते
वैकृता स्वरभक्तिस्तु स्वर्यते पूर्वमुच्चरेत् १३

[इति प्रणवविचारः समाप्तम्]

Reference:
Praṇava Vicāra, pages 181-182 in the Ātreya Śikṣā bundle, (cod. Palmbl. III 8/133) in the collection of the Hamburg Staats-Universitaet Bibliothek, Grantha script on palm leaves, 1 folio.